# श्रीदत्तात्रेय अष्टचक्रबीजस्तोत्रम्

{॥ श्रीदत्तात्रेय अष्टचक्रबीजस्तोत्रम् ॥}

दिगंबरं भस्मसुगन्धलेपनं

चक्रं त्रिशूलं डमरुं गदां च ।

पद्मासनस्थं ऋषिदेववन्दितं

दत्तात्रेयध्यानमभीष्टसिद्धिदम् ॥ १॥

मूलाधारे वारिजपद्मे सचतुष्के

वंशंषंसं वर्णविशालैः सुविशालैः ।

रक्तं वर्णं श्रीभगवतं गणनाथं

दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ २॥

स्वाधिष्ठाने षट्दलपद्मे तनुलिंगे

बालान्तैस्तद्वर्णविशालैः सुविशालैः ।

पीतं वर्णं वाक्पतिरूपं द्रुहिणं तं

दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ ३॥

नाभौ पद्मे पत्रदशांके डफवर्णे

लक्ष्मीकान्तं गरूढारूढं मणिपूरे ।

नीलवर्णं निर्गुणरूपं निगमाक्षं

दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ ४॥

हृत्पद्मांते द्वादशपत्रे कठवर्णे

अनाहतांते वृषभारूढं शिवरूपम् ।

सर्गस्थित्यंतां कुर्वाणं धवलांगं

दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ५ ॥

कंठस्थाने चक्रविशुद्धे कमलान्ते

चंद्राकारे षोडशपत्रे स्वरवर्णे

मायाधीशं जीवशिवं तं भगवंतं

दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ ६॥

आज्ञाचक्रे भृकुटिस्थाने द्विदलान्ते

हं क्षं बीजं ज्ञानसमुद्रं गुरूमूर्तिं

विद्युत्वर्णं ज्ञानमयं तं निटिलाक्षं

दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ ७॥

मूर्ध्निस्थाने वारिजपद्मे शशिबीजं

शुभ्रं वर्णं पत्रसहस्त्रे ललनाख्ये

हं बीजाख्यं वर्णसहस्त्रं तूर्यांतं

दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ ८॥

ब्रह्मानन्दं ब्रह्ममुकुन्दं भगवन्तं

ब्रह्मज्ञानं ज्ञानमयं तं स्वयमेव

परमात्मानं ब्रह्ममुनीद्रं भसिताङ्गं

दत्तात्रेयं श्रीगुरूमूर्तिं प्रणतोऽस्मि ॥ ९॥

Encoded and proofread by

Dinkar Deshpande dinkar.deshpande@gmail.com

Sunder Hattangadi sunderh@hotmail.com